३ १२ ३ १२र ३ १२र १२र ३२
सेदिरे२ विभूषन् वि भूषन् अग्ने उभयान् अनु व्रता

३२ ३१२ १२र३१२ ३ २ ३ २
दूतः देवानाम् रजसीइति सम् ईयसे यत् ते धीतिम्

२ २ ३ २ ३ १२ ३ १२ १२र
सुमतिम् सु मतिम् आवृणीमहे आ वृणीमहे अध

३ १२ ३ १२र ३२ ३ १२
स्म नः त्रिवरूथः त्रि वरूथः शिवः भव २ ॥ १३ ॥ उप

३२ ३१२ १२र ३१२ ३ १२र १२र
त्वाजामयोगिरः १ यस्य त्रिधातु त्रि धातु अवृतम् अ

३ २ ३२ १२र ३ १२र
वृतम् बर्हिः तस्थौ असन्दिनम् अ सन्दिनम् आपः

३ २ ३ ३२ ३२ ३१२ ३१२ १२र
चित् नि दध पदम् पदम् २ देवस्य मीढूषः अना-

३ १२ १२ १२र ३
धृष्टाभिः अन् आधृष्टाभिः ऊतिभिः भद्रा सूर्यः इव

२ २ ३ २
उपदृक् उप दृक् ३ ॥ १४ ॥

॥ इत्युत्तरापदे सप्तमप्रपाठकस्य द्वितीयार्द्धः ॥

३ १२ ३१२ ३२ १२र ३
ॐ अभित्वापूर्वपीतये १ अस्य इत् इन्द्रः वावृधे

१२र १२र १२र ३१२ १२र ३२ ३ २
वृष्णम् शवः मदे सुतस्य विष्णवि अद्य अ द्य तम्

३ १२ ३१२ १२ ३१२ ३
अस्य महिमानम् आयवः अनुष्टुवन्तिपूर्वथा २ ॥१॥ प्र वाम्

१२ ३ १२ ३ १२र ३ १ २ १२र
अर्चन्ति उक्थिनः नीथाविदः नीथ विदः जरितारः इन्द्राग्नी

१२र ३ १२ १२र ३ १२र १२र
इन्द्र अग्नीइति इषः आ वृणे १ इन्द्राग्नी इन्द्र

३ १२ ३ २ १२र ३१२ ३२ ३
अग्नीइति नवतिम् पुरः दासपत्नीः दास पत्नीः

२ १२र १२ १२र १२र ३
अधूनुतम् साकम् एकेन कर्मणा २ इन्द्राग्नी इन्द्र अग्नी-
१२ १२र १२र १२र ३ १२ ३१
इति अपसः परि उप प्र यन्ति धीतयः ऋतस्य
३०२ १२र १२र १२र ३ १२ ३ १ १ ३
पथ्याः अनु ३ इन्द्राग्नी इन्द्र अग्नीइति तविषाणि वाम्
१२ ३२ ३ १२र ३ २ ३१२
सधस्थानि सध स्थानि प्रयांसि च युवोः अप्तूर्यम्
३ १२र ३२ ३२ १२ ३२ १२र
अप् तूर्यम् हितम् ४ ॥२॥ शग्धय़ू३षुशचीपते १ पौरः अश्वस्य
३ २ ३ २ १२र ३ १२र ३
पुरुकृत् पुरु कृत् गवाम् असि उत्सः एत् सः देव
१२ ३ २ १२र ३ १२ ३
हिरण्ययः न किः हि दानम् परिमर्धिषत् परि
१२र १ २ १२र ३ १२र
मर्धिषत् त्वेइति यद्यत् यत् यत् यामि तत् आ
३ २उ ३१२ ३२ ३१२
भर २ ॥३॥ त्वंह्येहिचेरवे १ त्वम् पुरु सहस्राणि
३१२ ३ २ ३१२ ३ २ ३ २
शतानि च यूथा दानाय मंहसे आ पुरन्दरम्
३ २ ३ १२र १२र ३ १२र
पुरम् दरम् चकृम विप्रवचसः विप्र वचसः इन्द्रम्
१२र १२र २उ ३ १२३१२ १२र ३ २
गायन्तः अवसे २ ॥४॥ योविश्वादयतेवसु १ अश्वम् न गोभिः
३०२ ३१२ ३ १२र ३ १२ ३१२ ३२
रथ्यम् सुदानवः सु दानवः मर्मृज्यन्ते देवयवः उभे-
३ १ १२र ३ २३१२ ३१
इति तोकेइति तनये दस्म विश्पते पर्षि राधो मघो
२ ३२ ३ १२र ३२ ३ २
नाम् २ ॥५॥ इमम् मे वरुण श्रुधि हवम् अद्य च च
३ २ ३ २ २ ३ १२र
च मृडय त्वाम् अवस्युः आ चके १ ॥ ६ ॥ कया त्वम्

३ ३ २ ३ २ ३ १ २र ३ १ २
नः ऊत्या अभि प्र मन्दसे वृषन् कया स्तोतृभ्यः आ

३ २ ३ २ ३ १ २ १ २र ३ २ १ २र ३ १ २
भर १ ॥ ७ ॥ इन्द्रमिद्देवतातये १ इन्द्रः मह्ना रोदसीइति

३ १ २र १ २र १ २र ३ १ २र ३ १ २र
पप्रथत् शवः इन्द्रः सूर्यम् अरोचयत् इन्द्रे ह विश्वा

१ २र ३ १ २र ३ १ २ १ २र १ २र
भुवनानि येमिरे इन्द्रे स्वानासः इन्दवः २ ॥ ८ ॥ विश्व-

१ २र ३ १ २ ३ २ ३ २ ३
कर्मन् विश्व कर्मन् हविषा वावृधानः स्वयम् यजस्व

३७ २ ३ १ २र ३ २ ३ २ ३ १ २२
तन्वम् स्वा हि ते मुह्यन्तु अन्ये अन् ये अभितः

१ २र ३ २ २ १ २ ३ १ २ ३ २र ३
जनासः इह अस्माकम् मघवा सूरिः अस्तु १ ॥ ९ ॥

३ २ ३ १ २र ३ २ १ २र १ २र ३ १ २ ३ १ २र
अयारुचाहरिण्यापुनानः १ प्राचीम् अनु प्रदिशम् प्र दिशम्

३ १ २र ३ १ २ ३ २ १ २र
याति चेकितत् सम् रश्मिभिः यतते दर्शतः रथः

१ २र ३ २ १ २र १ २र ३ १ २ १ २र २ २र
दैव्यः दर्शतः रथः अग्मन् उक्थानि पौंस्या इन्द्रम्

१ २र ३ २ १ २र ३ २ १ २र १ २र
जैत्राय हर्षयन् वज्रः च यत् भवथः अनपच्युता अन्

३ ३ १ २ ३ १ २र १ २र २ ३
अपच्युता समत्सु स मत्सु अनपच्युता अन् अपच्युता २

२ ३ २ ३ २ ३ १ २ ३ १ २र
त्वम् ह त्यत् पणीनाम् विदः वसु सम् मातृभिः

३ २ १ २र ३ १ २ ३ १ २ १ २र ३
मर्जयसि स्वे आ दमे ऋतस्य धीतिभिः दमे परा-

१ २ १ २र १ २र १ २र ३ १ २ ३ १ २
वतः न साम तत् यत्र रणन्ति धीतयः तृधातुभिः

३ १ २र १ २र १ २र ३ १ २र १ २र
त्रि धातुभिः अरुषीभिः वयः दधे रोचमानः वयः

३ ३२ ३ १ २ ३ १ २र १ २र
दधे ३ ॥१०॥ उत नः गोषणिम् गो सनिम् धियम्
३ २ ३ २ ३ २ ३ २ ३ २ ३ २
अश्वसाम् अश्व साम वाजसाम् वाज साम् उत नृवत्
३ १ २ ३ १ २र ३ १ २र १ २र ३
कृणुहि ऊतये १ ॥११॥ शशमानस्य वा नरः स्वेदस्य सत्य-
२ १ २र १ २र १ २र
शवसः सत्य शवसः विद कामस्य वेनतः १ ॥१२॥ उप
३ १ २ १ २र ३ १ २ ३ १ २ ३ १ २र ३ २
नः सूनवः गिरः शृण्वन्तु अमृतस्य अ मृतस्य ये सुमृडीकाः
३ २ ३ २ ३ १ २र २ ३र
सु मृडीकाः भवन्तु नः १ ॥ १३ ॥ प्र वाम् महि द्यवी-
१ २ ३ २ १ २र १ २र ३ २ ३र १ २
इति अभि उपस्तुतिम् उप स्तुतिम् भरामहे शुचीइति
१ २र १ २र ३ १ २ ३७२ ३ २ १ २र
उप प्रशस्तये प्र शस्तये १ पुनानेइति तन्वा मिथः स्वेन
१ २र ३ २ ३ १ २ ३ २ ३ २ ३ १ २
दक्षेण राजथः जह्याथेइति सनात् ऋतम् २ महीइति
३ १ २ ३ १ २र ३ १ २र ३ १ २ १ २र ३ १ २
मित्रस्य मि त्रस्य साधथः तरन्तीइति पिप्रतीइति
३ २ १ २र ३ २ ३ ३ १ २ ३ १ २
ऋतम् परि यज्ञम् नि सेदथुः ३ ॥१४॥ अयमुतेसमतसि १
३ २ ३ १ २र ३ १ २र ३
स्तोत्रम् राधानाम् पते गिर्वाहः वीर यस्य ते
१ २र ३ १ २र ३ १ २र ३ २ ३र
विभूतिः वि भूतिः अस्तु सूनृता सु नृता २ ऊर्ध्वः तिष्ठ
१ २ ३ २ १ २र ३ २
नः ऊतये अस्मिन् वाजे शतक्रतो शत क्रतो सम्
३ १ २ ३ १ २र ३ २ ३ १ २ ३ २
अन्येषु अन् येषु ब्रवावहै ३ ॥ १५ ॥ गावउपवदावटे १
३ १ २ ३ १ २र १ २र ३ १ २र
अभ्यारम् अभि आरम् इत् अद्रयः अ द्रयः निषिक्तम् नि

३ १२र १२र ३ १२ ३१२ ३ १२र
सिक्तम् पुष्करे मधु अवटस्य विसर्जने वि सर्जने २

३१२ १२र ३ २ ३१२ ३२ ३
सिञ्चन्ति नमसा अवटम् उच्चाचक्रम् उच्चा चक्रम्

१२र १२र ३ १२ ३१२ ३
परिज्मानम् परि ज्मानम् नीचीनवारम् नीचीन वारम्

१ २र ३ १ ३ २ ३
अक्षितम् अ क्षितम् २ ॥ १६ ॥ मा भेम मा श्रमिष्म

३१२ ३२ ३ २ १२र ३२ ३ १२र ३
उग्रस्य सख्ये स ख्ये तव महत् ते वृष्णः अभि-

१२ ३ १२र ३२ १२र ३१२ १२र
चक्ष्यम् अभि चक्ष्यम् कृतम् पश्येम तुर्वशम् यदुम् १

३२ १२र ३१२ ३ १२र ३२ ३
सव्याम् अनु स्फिग्यम् वावसे वृषा न दानः अस्य

१२र १२र ३ १२ ३१२
रोषति मध्वा सम्पृक्ताः सम् पृक्ताः सारघेण धेनवः

१२र ३ १२र १२र ३१२
तूयम् आ इहि द्रव पिब ३ ॥१७॥ इमाउत्वापुरूवसो १

३२ ३१२ १२र १२र १२र ३ २
अयम् सहस्रम् ऋषिभिः सहस्कृतः सहः कृतः समुद्रः

३ २ ३ २ ३ २ ३
सम् उद्रः इव पप्रथे सत्यः सः अस्य महिमा गृणे

१२र ३१२ ३ १२र ३ १२र १२र
शवः यज्ञेषु विप्रराज्ये विप्र राज्ये २ ॥ १८ ॥ यस्य

३२ १२र १२र १२र ३ २ ३ २
अयम् विश्वः आर्यः दासः शेवधिपाः शेवधि पाः

३२ ३२ ३ २ ३१२ १२र १२र
अरिः तिरः चित् अर्ये रुशमे पवीरवि तुभ्य इत्

३ २ ३ १२ १२र ३ १२ ३
सः अज्यते रयिः १ तुरण्यवः मधुमन्तम् घृतश्चुतम् घृत

१२र १२र ३ २ ३ १ २
श्चुतम् विप्रासः वि प्रासः अर्कम् आनृचुः अस्मे इति

३ २ ३ १ २र १ २र ३ १ २ ३ १ २ १ २र
रयिः पप्रथे वृषणं श्रवः अस्मेइति स्वानासः इन्दवः २
१ २ ३ १ २र
॥ १९ ॥ गोमन्निन्दोअश्ववत् १ सः नः हरीणाम् पते
१ २र ३ १ २ ३ २ ३ २ ३ १ २र ३
इन्दो देवप्सरस्तमः देव प्सरस्तमः सखा स खा
३ १ २र २र १ २र ३ २ ३ १ २र
इव सख्ये स ख्ये नर्यः रुचे भव २ सनेमि त्वम्
३ २ १ २र ३ २ ३ १ २
अस्मत् आ अदेवम् अ देवम् कम् चित् अत्रिणम्
३ २ ३ १ २र १ २र १ २र ३ २ ३ २ ३
साह्वान् इन्दो परि बाधः अप द्वयुम् ३ ॥२०॥ अञ्जते-
२र ३ १ २ ३ १ २ ३ १ २र १ २र ३
व्यञ्जतेसमञ्जते १ विपश्चिते विपः चिते पवमानाय गायत
२ १ २र १ २र १ २र ३ १ २र ३ २
मही न धारा अति अन्धः अर्षति अहिः न जूर्णाम्
१ २र ३ १ २र १ २र १ २र ३ १ २र
अति सर्पति त्वचम् अत्यः न क्रीळन् असरत् वृषा
१ २र ३ १ २ ३ २ १ २र १ २र ३ १ २
हरिः २ अग्रेगः अग्रे गः राजा अप्यः तविष्यते विमानः
३ १ २र १ २र ३ १ २र १ २र १ २र
वि मानः अह्नाम् अ ह्नाम् भुवनेषु अर्पितः हरिः
३ १ २ ३ २ ३ ३ १ २ ३ १ २ ३ २ ३ १
घृतस्नुः घृत स्नुः सुदृशीकः सु दृशीकः अर्णवः ज्योती
२ ३ २ ३ २ ३७ २
रथः ज्योतिः रथः पवते रायः ओक्यः ॥ २१ ॥

॥ इत्युत्तरापदे सप्तमप्रपाठकः ॥

१ २र ३ १ २र ३ २ ३ २ ३ २
ॐ विश्वेभिः अग्ने अग्निभिः इमम् यज्ञम् इदम्
१ २र १ २र ३ २ ३ २
वचः चनः धाः सहसः यहो १ यत् चित् हि

१ २र  १ २र  ३ १ २  ३ २  १  १ २र
अश्वता तना देवन्देवम् देवम् देवम् यजामहे

१ २  ३  २  ३ २  ३  १ २
त्वेइति इत् हूयते हविः २ प्रियः न: अस्तु विश्पतिः

१ २र  ३ २  १ २र  ३ २  ३ १ २  ३  १ २
होता मन्द्रः वरेण्यः प्रियाः स्वग्नयः सु अग्नयः

३ २  १ २र  ३  १ २  १ २र  १ २र  १ २र
वयम् ३ ॥१॥ इन्द्रम् वः विश्वतः परि हवामहे जनेभ्यः

३ १ २  ३  १ २र  ३  २
अस्माकम् अस्तु केवलः १ सः नः वृषन् असुम्

३ २  १ २र  १ २र  ३  १ २र  ३
चरुम् सत्रादावन् सत्रा दावन् अप वृधि

१ २  १ २र १ २र  ३  १ २र ३ २  ३
अस्मभ्यम् अप्रतिष्कुतः अ प्रतिष्कुतः २ वृषा यूथा इव

१ २र  ३ २  ३  १ २र  १ २र  १ २र
वंꣳसगः कृष्टीः इयर्त्ति ओजसा ईशानः अप्रतिष्कृतः अ

३ २  १ २ ३ २ ३ २  १ २र  ३ २  ३ १ २
प्रतिष्कुतः ३ ॥ २ ॥ त्वन्नश्चित्रजत्या १ पर्षि तोकम् तनयम्

३ १ २  १ २र  ३  १ २र
पर्तृभिः त्वम् अदब्धैः अ दब्धैः अप्रयुत्वभिः अ

३  १ २र  १ २र  १ २र  ३  १ २र
प्रयुत्वभिः अग्ने हेडांꣳसि दैव्या युयोधि नः अदे-

३  १ २र  ३  २  ३
वानि अ देवानि ह्वरांꣳसि च २ ॥३॥ किम् इत् ते विष्णो

१ २  ३ २  १ २र  १ २र  ३ २  ३  २
परिचक्षि परि चक्षि नाम प्र यत् ववक्षे शिपिविष्टः

३  २  ३  २  १ २र  ३ २  १ २र  ३
शिपि विष्टः अस्मि मा वर्पः अस्मत् अप गूहः

२  ३ १ २  ३ २  ३  २  ३  २
एतत् यत् अन्यरूपः अन्य रूपः समिथे सम् इथे

३ १ २  ३  २  ३  २  ३
बभूथ १ प्र तत् ते अद्य अ द्य शिपिविष्टः शिपि

विष्टः हव्यम् अर्यः प्रशंसामि वयुनानि विद्वान् तम्
त्वा गृणामि तवसम् अतव्यान् अ तव्यान् क्षयन्तम् अस्य
रजसः पराके २ वषट् ते विष्णो आसः आ कृणोमि
तत् मे जुषस्व शिपिविष्ट शिपि विष्ट हव्यम् वर्धन्तु
त्वा सुष्टुतयः सु स्तुतयः गिरः मे यूयम्पातस्वस्तिभिः-
सदानः ३ ॥ ४ ॥ वायो शुक्रः अयामि ते मध्वः अग्रम्
दिविष्टिषु आ याहि सोमपीतये सोम पीतये स्पार्हः
देव नियुत्वता नि युत्वता १ इन्द्रः च वायो एषाम्
सोमानाम् पीतिम् अर्हथः युवाम् हि यन्ति इन्दवः
निम्नम् आपः न सध्र्यक् स ध्र्यक् २ वायो इन्द्रः च
शुष्मिणा सरथम् स रथम् शवसः पतीइति नियु-
त्वन्ता नि युत्वन्ता नः ऊतये आ यातम् सोम-
पीतये सोम पीतये ३ ॥ ५ ॥ अध क्षपा परिष्कृतः परि
कृतः वाजान् अभि प्र गाहसे यदि विवस्वतः वि
वस्वतः धियः हरिम् हिन्वन्ति यातवे १ तम् अस्य
मर्जयामसि मदः यः इन्द्रपातमः इन्द्र पातमः यम्

गावः आसभिः दधुः पुरा नूनम् च सूरयः २ तम्
गाथया पुराण्या पुनानम् अभि अनूषत उत ऊ
कृपन्त धीतयः देवानाम् नाम बिभ्रतीः ३ ॥ ६ ॥ अश्व-
न्त्वावारवन्तम् १ सः घ नः सूनुः शवसा पृथुप्रगामा
पृथु प्रगामा सुशेवः सु शेवः मीढ्वान् अस्माकम् बभू-
यात् ३ सः नः दूरात् दुः आत् च आसात् च नि
मर्त्यात् अघायोः पाहि सदम् दूत् विश्वायुः विश्व
आयुः ३ ॥ ७ ॥ त्वमिन्द्रप्रतूर्त्तिषु १ अनु ते शुष्मम् तुरयन्तम्
ईयतुः क्षोणीइति शिशुम् न मातरा विश्वाः ते
स्पृधः श्नथयन्त मन्यवे वृत्रम् यत् इन्द्रः तूर्वसि २ ॥ ८ ॥
यज्ञइन्द्रमवर्द्धयत् १ वि अन्तरिक्षम् अतिरत् मदे सोमस्य
रोचना इन्द्रः यत् अभिनत् वलम् २ उत् गाः आ-
जत् अङ्गिरोभ्यः आविः आ विः कृण्वन् गुहा सतीः
अर्वाञ्चम् नुनुदे वलम् ३ ॥ ९ ॥ त्यमुवःसत्रासाहम् १ युध्मम्
सन्तम् अनर्वाणम् अन् अर्वाणम् सोमपाम् सोम पाम्
अनपच्युतम् अन् अपच्युतम् नरम् अवार्यक्रतुम् अवार्य

३ १२र ३ २ ३२ ३ २
क्रतुम् २ श्चिच नः इन्द्र रायः आ पुरु विद्वान्
३ १२र ३ १२र १२र १२र ३
ऋचीषमः अव नः पार्ये धने ३ ॥१०॥ तव त्यत् इन्द्रि-
२ ३२ १२र १२र ३२ १२र १२र ३
यम् बृहत् तव दक्षम् उत क्रतुम् वज्रम् शिशाति
१२ १२र १२र ३ १ २ ३ २
धिषणा वरेण्यम् १ तव द्यौः इन्द्र पौंस्यम् पृथिवी
३ १२र १२र २र ३ २
वर्द्धति श्रवः त्वाम् आपः पर्वतासः च हिन्विरे २ त्वाम्
१२र ३२ १२र ३२ ३ २ ३ १२र
विष्णुः बृहन् क्षयः मित्रः भि त्रः गृणाति वरुणः
१२र ३ १२र १२र १२ ३
त्वाम् शर्द्धः मदति अनु मारुतम् ३ ॥ ११ ॥ नमस्ते अग्न
१ २ ३२ ३ १२र ३ १२र ३१२ ३
ओजसे १ कुवित् सु नः गविष्टये गो इष्टये अग्ने संवशिषः सम्
१२र ३२ १२र १२र ३ २ ३ २
वेशिषः रयिम् उरुकृत् उरु कृत् उरु नः कृधि २ मा
३ २ ३ २ १२र ३ २
नः अग्ने महाधने महा धने परा वर्क् भारभृत्
३ २ ३ १२ ३ ३२ ३२
भार भृत् यथा संवर्गम् सम् वर्गम् सम् रयिम्
३ १२ ३२११२ ३ १२ १२र
जय ३ ॥१२॥ समस्य मन्यवे विशः १ वि चित् वृत्रस्य दोधतः
१२र ३ १२ १२ ३१२ ३१२
शिरः विभेद वृष्णिना वज्रेण शतपर्वणा २ ओजस्तदस्यति-
३१२ ३ १२र १२र १२र ३१२
त्विषे ३ ॥ १३ ॥ सुमन्मा सु मन्मा वस्वी रन्ती सूनरी
३ १२र १२र ३ १ १ २ ३२
सू नरी १ सरूप स रूप वृषन् आ गहि इमौ भद्रौ
१२र ३२ ३२ १२र ३ २ ३ १ ३
धुर्यौ अभि तौ इमौ उप संपतः २ नि इव शीर्षाणि

३ १ २र १ २र ३ १ २र ३ १ २
मृढ़म् मधित्र आपस्य तिष्ठति मृङ्गे भिः दृशभिः
३ २
दृिशन् २ ॥ १४ ॥

॥ इत्युत्तरापदे अष्टमप्रपाठकस्यार्द्धः ॥

१ २ ३ १ २ २ ३ २ २ ३ २ १ २ ३
ॐ पन्यस्यन्यमित्सोतारः १ आ इह हरीईति ब्रह्म-
१ २ ३ १ २र ३ २ ३ १ २र ३
युजा ब्रह्म युजा ग्मा वचतः सखायम् स खायम्
१ २र ३ २ १ २र २ ३ १ २र ३ २
इन्द्रम् गाभिः गिर्वणसम् गिः वनसम् २ पाता वृत्रहा
३ २ ३ २ ३ २ ३ २ ३ २
वृत्र हा सुतम् आ घ गमत् न आरे अस्मत्
३ १ २ ३ १ ३ १ २ ३ १
नि यमते शतमूतिः शतम् ऊतिः ३ ॥ १ ॥ आत्वाविशन्त्वि-
२ ३ १ २ ३ २ ३ २ १ २र ३
न्दवः १ विव्यकथ महिना वृषन् भक्षम् सोमस्य जागृवे
२ ३ १ २ ३ १ २र ३ १ २ १ २र
यः इन्द्र जठरेषु ते २ अरम् ते इन्द्र कुक्षये सोमः
३ १ २र १ २र १ २र
भवतु वृत्रहन् वृत्र हन् अरम् धामभ्यः इन्दवः ३ ॥२॥
१ २ ३ १ २ ३ २ ३ २ ३
जराबोधतद्विविड्ढि १ सः नः महान् अनिमानः अ
२ ३ १ २ ३ २ ३ २ ३ २
निमानः धूमकेतुः धूम केतुः पुरुश्चन्द्रः पुरु चन्द्रः
३ २ १ २र ३ २ ३ २ ३ १ २
धिये वाजाय हिन्वतु २ सः रेवान् इव विश्पतिः
१ २र ३ २ ३ २ ३ २ ३ १ २ ३ २
दैव्यः केतुः शृणोतु २ नः उक्थैः अग्निः बृहद्भानुः बृहत्
३ १ २ ३ १ २र ३ १ २र ३
भानुः ३ ॥ ३ ॥ तद्वागायसुतेसचा १ न घ वसुः नि यमते

२ १२र १२र ३ १२र १२र १२र
दानम् वाजस्य गोमतः यत् सीम् उप अवत् गिरः २

३ १२ ३२ ३ ३ ३२ १२र ३ २
कुविक्सस्य कुवित् सस्य प्र हि व्रजम् गोमन्तम् दस्युहा

३ २ १२र १२र १२र ३
दस्यु हा गमत् शचीभिः अप नः वरत् ३ ॥ ४ ॥

३२उ ३ १२ १ २ ३२ ३ १२र ३२
इदंविष्णुर्विचक्रमे १ त्रीणि पदा वि चक्रमे विष्णुः गोपाः

३ २ १२र ३ १२र १२र ३१२
गो पाः अदाभ्यः अ दाभ्यः अतः धर्माणि धारयन् २

१२र १२र ३ १२र ३१२ ३ २ १२र
विष्णोः कर्माणि पश्यत यतः व्रतानि पस्पशे इन्द्रस्य

१२र १२र २ ३ २ १२र ३२ ३२ १२र
युज्यः सखा स खाम् तत् विष्णोः परमम् पदम् सदा

३ १२ ३२ ३ १२र १२र ३
पश्यन्ति सूरयः दिवि इव चक्षुः आततम् आ ततम् ४

२ १२र ३ १२ ३ १ २
तत् विप्रासः वि प्रासः विपन्यवः जागृवांसः सम्

३ १२र ३२ ३२ १२र ३२ ३
इन्धते विष्णोः यत् परमम् पदम् ५ अतः देवाः अवन्तु

१२र १२र ३ २ ३ २ ३ २ १२र
नः यतः विष्णुः विचक्रमे वि चक्रमे पृथिव्याः अधि

१२र १ २र३१२३२ ३२ ३ १२
सानवि ६ ॥ ५ ॥ मोषुत्वावाघतश्चन १ इमे हि ते ब्रह्मकृतः

३ १२र ३२ १२र १२र १२र १२र १२र
ब्रह्म कृतः सुते सचा मधौ न मक्षः आसते इन्द्रे

१२र ३ १२ ३ १२ १२र १२र ३
कामम् जरितारः वसूयवः रथे न पादम् आ दधुः २

१२र १२र ३२ १२र १२र ३ २
॥ ६ ॥ अस्तावि मन्म पूर्व्यम् ब्रह्म इन्द्राय वोचत पूर्वीः

३१२ ३१२ ३ २ ३२ ३ २
ऋतस्य बृहतीः अनूषत स्तोतुः मेधाः असृक्षत १ सम्

१ २र १ २र ३ १ २ ३ २' ३ १ २
इन्द्रः रायः बृहतीः अधूनुत सम् क्षोणीइति सम्

३ १ २र ३ ३ १ २ १ २र १ २र
उ सूर्यम् सम् शुक्रासः शुचयः सम् गवाशिरः गो

३ १ २र १ २र ३ १ २ ३
आशिरः सोमाः इन्द्रम् अमन्दिषुः २ ॥ ७ ॥ इन्द्रायसोम-

१ २ ३ १ २ ३ १ २र
पातवे १ तम् सखायः स खायः पुरूरुचम् पुरू रुचम्

३ २ ३ २ ३ १ २ ३ १ २ १ २र १ २र ३
वयम् यूयम् च सूरयः अश्याम वाजगन्ध्याम् वाज गन्ध्यम्

१ २ १ २र १ २र ३ २ ३ १ २ ३ १ २
सनेम वाजपस्त्यम् वाज प्रस्त्यम् २ परित्यꣳहर्यतꣳहरिम् ३ ॥ ८ ॥

१ २र ३ १ २ ३ १ २ ३ १ २र
कस्तमिन्द्रत्वावसो १ मर्त्यो नः स्म वृत्रहत्येषु वृत्र हत्येषु

३ २ १ २र ३ २ १ २र १ २र १ २र
चोदय ये ददति प्रिया वसु तव प्रणीति प्र

३ १ २ १ २र ३
नीति हर्यश्व हरि अश्व सूरिभिः विश्वा तरेम

२ ३ २ २ ३ १ २ ३ १ २ १ २र ३
दुरिता दुः इता २ ॥ ९ ॥ एदुमधोर्मदिन्तरम् १ इन्द्र स्यातः

२ ३ ३ ३ १ २ १ २र ३ २
हरीणाम् न किः ते पूर्व्यस्तुतिम् पूर्व्य स्तुतिम् उत्

३ १ २र ३ १ २ ३ १ २र
आनꣳश शवसा न भन्दना २ तम् वः वाजानाम्

१ २र १ २र ३ १ २ १ २र ३
पतिम् अहूमहि श्रवस्यवः अप्रायुभिः अ प्रायुभिः

१ २ ३ १ २ १ २ ३ ० २र १ २र
यज्ञेभिः वावृधेन्यम् ३ ॥ १० ॥ तन्नूनर्यास्वर्णरम् १ विभूतरातिम्

१ २र ३ १ २ ३ २ ३
विभूत रातिम् विप्र वि प्र चित्रशोचिषम् चित्र शोचि-

२ ३ १ २ ३ २ १ २र ३ १ २
षम् अग्निम् ईडिष्व यन्तुरम् अस्य मेधस्य सोमस्य

३ २ १२ १२र १ ३ ३ १
सोभरे प्र ईम् अध्वराय पूर्व्यम् २ ॥ ११ ॥ आसोमस्वानो-

२र ३ २ १२र ३ २ ३ २उ
अद्रिभिः १ सः मामृजे तिरः अरवानि मेष्यः मीढ्वाꣳ-

३१२३२ ३ १ २ ३ १२र १२र ३
सप्तिर्नवाजयुः अनुमाद्यः अनु माद्यः पवमानः मनी-

१२ १२र १२र १ ३ १२र
षिभिः सोमः विप्रेभिः वि प्रेभिः ऋक्किभिः २ ॥ १२ ॥

३१२ ३२ १२र ३ २ ३ १ २
वयमेनमिदाह्यः १ त्वक्तः चित् अस्य वारणः उरामथिः

३ १र ३१२ ३ २ ३२ ३
उरा मथिः आ वयुनेषु भूषति स इमम् नः

१ २र ३ २ ३ १२र ३१२ ३२
स्तोमम् जुजुषाणः आ गहि इन्द्र प्र चित्रया धिया २

१२र १२र ३ १२ ३ २ ३२ १२र
॥ १३ ॥ इन्द्राग्नी इन्द्र अग्नीइति रोचना दिवः परि

१२र ३ २ ३ २ ३ २र १ २ ३
वाजेषु भूषथः तत् वाम् चेति प्र वीर्यम् १ इन्द्राग्नी

१२३१२ १२ ३१ २ १२ ३१
अपसस्परि २ इन्द्राग्नीतविषाणिवाम् ३ ॥ १४ ॥ कईवेदसुते-

२र ३ २ ३२ ३ २ ३१२ ३१२ ३
सचा १ दाना मृगः न वारणः पुरुत्रा चरथम् दधे

२ ३ २ ३ २ ३२ ३ २ ३
न किः त्वा नि यमत् आ सुते गमः महान् चरसि

१२र ३ २ १ १२र ३ २
ओजसा २ यः उग्रः सन् अनिष्टृतः अ निष्टृतः स्थिरः

१२र १ २र ३ १२र ३ २र ३१२
रणाय सꣳस्कृतः सम् कृतः यदि स्तोतुः मघवा

३१२ १२र १२र ३ २ ३
शृणवत् हवम् न इन्द्रः योषति आ गमत् ३ ॥ १५ ॥

१२ १२र ३१२ १२र ३१ २र
पवमानाअसृक्षत सोमाः शुक्रासः इन्दवः अभिविश्वा-

३ १ २ १ २र ३ २ १ २र ३ १ २ ३
निकाव्या १ पवमानाः दिवः परि अन्तरिक्षात् असृक्षत
३ २उ ३ १ २ १ २र ३ १ २ ३१२ ३
पृथिव्याअधिसानवि २ पवमानासः आशवः शुभ्राः असृग्रम्
१ २र १ २र १ २र १ २र १ २र ३ २ ३
इन्दवः घ्नन्तः विश्वाः अप द्विषः ३ ॥ १६ ॥ तोशा वृत्र-
१ २ ३ १ २र ३ १ २ ३ १ २र १ २र
हणा हुव हना हुवे सजित्वाना स जित्वाना अपरा-
२ ३ ३ २ ३ १ २ ३
जिता अ पराजिता इन्द्राग्नी इन्द्र अग्नीइति वाज-
१ २ ३ १ २र १ २ ३ १ २ १ २
सातमा वाज सातमा १ प्रवामर्चन्त्युक्थिनः २ इन्द्राग्नी-
३ १ २र १ २र ३ १ २ ३ २ ३
नवतिम्पुरः ३ ॥ १७ ॥ उप त्वा रण्वसंदृशम् रण्व संदृशम्
१ २र ३ १ २र ३ १ २ १ २र
प्रयस्वन्तः सहस्कृत सहः कृत अग्ने ससृज्महे गिरः १
१ २र ३ २ ३ १ २र १ २र १ २र ३ २ १ २र
उप छायाम् इव घृणेः अगन्म शर्म ते वयम् अग्ने
१ २र १ २र ३ २ ३ २ ३ ३ २
हिरण्यसंदृशः हिरण्य सदृशः २ यः उग्रः इव शर्यहा
३ २ ३ १ २ ३ २ ३ २ १ २र १ २र
शर्य हा तिग्मशृङ्गः तिग्म शृङ्गः न वंसगः अग्ने
१ २र ३ १ २ ३ २ ३ २ ३ २
पुरः रुरोजिथ ३ ॥ १८ ॥ ऋतावानम् वैश्वानरम् वैश्व नरम्
३ १ २ १ २र १ २र १ २र ३ २
ऋतस्य ज्योतिषः पतिम् अजस्रम् अ जस्रम् धर्मम्
३ २ ३ २ ३ २ ३ २ ३ १२ १२
ईमहे १ यः इदम् प्रतिपप्रथे प्रति पप्रथे यज्ञस्य स्वः
३ १ २ ३ २ ३ २ ३ २ ३ २
उत्तिरन् उत तिरन् ऋतून् उत सृजति वशी २ अग्निः
३ १ २ १ २र १ २र ३ १ २ १ २र ३ २ ३
प्रियेषु धामसु कामः भूतस्य भव्यस्य संम्राट् . सम्

२ १ २र ३
राट् एकः वि राजति ३ ॥ १८ ॥

॥ इत्युत्तरापदे अष्टमप्रपाठकस्य द्वितीयार्द्धः ॥

३ २ ३ १ २ १ २र १ २र ३ ७ २
॥ ओँ ॥ अग्निः प्रत्नेन जन्मना शुम्भानः तन्वम्

२ ३ १ २र ३ १ २र ३ १ २ ३ २ ३ १
स्वाम् कविर्विप्रेणवावृधे १ ऊर्ज्जोनपातमाहुवे अग्निम् पावक-

२ ३ २ २ २ ३ २ ३ २ ३
शोचिषम् पावक शोचिषम् अस्मिन् यज्ञे स्वध्वरे सु

२ ३ २ १ २र
अध्वरे २ सः नः मित्रमहः मित्र महः त्वम् अग्ने

३ १ २ ३ १ २ १ २र ३ ३ १ २ २
शुक्रेण शोचिषा देवैः आ सत्सि बर्हिषि ३ ॥ १ ॥ उत्

३ १ २र ३ १ २र ३ १ २ ३
ते शुष्मासः अस्थुः रक्षः भिन्दन्तः अद्रिवः अ द्रिवः

१ २ ३ १ २ ३ १ २र ३ २ ३ २ ३
नुदस्व याः परिस्पृधः परि स्पृधः १ अया निजघ्निः निज

२ १ २र ३ २ ३ २ १ २र ३ २ १ २र
घ्निः ओजसा रथसङ्गे रथ सङ्गे धने हिते स्तवै

१ २र ३ २ १ २र ३ १ २ ३ १ २
अबिभ्युषा अ बिभ्युषा हृदा २ अस्य व्रतानि न आधृषे

३ १ २र १ २र ३ ७ २ ३ २ ३ १ २
आ धृषे पवमानस्य दूढ्या रुज यः त्वा पृतन्यति ३

३ १ २ ३ १ २र १ २र ३ १ २
तम् हिन्वन्ति मदच्युतम् मद च्युतम् हरिम् नदीषु

३ १ २ १ २र १ २र ३ २ २ ३ १ २ ३
वाजिनम् इन्दुम् इन्द्राय मत्सरम् ४ ॥ २ ॥ आमन्द्रैरिन्द्र-

१ २ ३ १ २ ३ १ २र ३ २ ३ २
हरिभिः १ वृत्रखादः वृत्र खादः वलम्रुजः वलम् रुजः

३ २ ३ २ ३ २ ३ २ १ २र १ २र १ २र
पुराम् दर्मः अपाम् अजः स्थाता रथस्य हर्योः

३ २ ३ २ १ २र ३ २ ३ २ ३
अभिस्वरे अभि स्वरे इन्द्रः दृढ़ा चित् आरुजः आ

१ ३ २ ३ २ ३ २ ३ १ २र ३
रुजः २ गम्भीरान् उद्धीन् उद् धीन् इव क्रतुम् पुष्यसि

२ ३ २ ३ २ ३ २ १ २र ३ १ २
गाः इव प्र सुगोपाः सु गोपाः यवसम् धेनवः

३ २ ३ २ ३ १ २ ३ २
यथा ह्रदम् कुल्याः इव आशत ३ ॥ ३ ॥ यथागौरो-

३ २ ३ २ १ २र ३ १ २र ३
अपाकृतम् १ मन्दन्तु त्वा मघवन् इन्द्र इन्दवः राधो-

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र १ २र
देयाय राधः देयाय सुन्वते आमुष्य आ मुष्य सोमम्

३ १ २ ३ २ १ २र ३ १ २र
अपिबः चमूदृति सुतम् ज्येष्ठम् तत् दधिषे सहः २॥४॥

२ ३ १ २र ३ ३ १ २र ३ १ २
त्वमङ्गप्रशꣳसिषः १ मा ते राधाꣳसि मा ते ऊतयः

३ २ १ २र ३ २ ३ १ २र ३ २
वसो अस्मान् कदा च न दभन् विश्वा च नः

२ २ ३ २ ३ १ २र ३ १ २
उपमिमीहि उप मिमीहि मानुष वसूनि चर्षणिभ्यः

१ २र ३ १ २ ३ १ २र १ २र ३ १ २
आ २ ॥ ५ ॥ प्रति स्या सूनरी सु नरी जनी व्युच्छन्ती

३ १ २ १ २र १ २र ३ २ ३ २ १ २र
वि उच्छन्ती परि स्वसुः दिवः अदर्शि दुहिता १ अश्वा

३ २ १ २र ३ २ १ २र ३ १ २ १ २र
इव चित्रा अरुषी माता गवाम् ऋतावरी सखा स

३ १ २ ३ २ ३ २ १ २र ३
खा भूत अश्विनोः उषाः २ उत सखा स खा असि

१ २ ३ २ ३ २ १ २र ३ ३ २ ३
अश्विनोः उत माता गवाम् असि उत उषः

१ २र ३ ३ २ ३ १ २र २ ३ २
वस्वः ईशिषे ३ ॥ ६ ॥ एषोउषाअपूर्व्या १ या दस्रा

१ २र १ २र ३ १ २ ३ २ ३ २
सिन्धुमातरा सिन्धु मातरा मनोतरा रयीणाम् धिया

३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
देवा वसुविदा वसु विदा २ वच्यन्ते वाम् ककुहासः

३ १ २ १ २र ३ १ २ ३ १ २र १ २र
जूर्णायाम् अधि विष्टपि यत् वाम् रथः विभिः

१ २र १ २र ३ २ ३ १ २
पतात् २ ॥ ७ ॥ उषः तत् चित्रम् आ भर अस्मभ्यम्

३ १ २र ३ २ ३ १ २र ३ १ २र १ २र
वाजिनीवति येन तोकम् च तनयम् च धामहे १ उषः

३ २ ३ २ ३ २ ३ १ २र ३
अद्य अ द्य इह गोमति अश्वावति विभावरि

२ ३ १ २ २
वि भावरि रेवत् अस्मेइति वि उच्छ सूनृतावति

२ ३ १ २र
सु नृतावति २ युंक्ष्व हि वाजिनीवति अश्वान्

३ २ ३ २ ३ २ ३ १ २र ३ १ २र १ २र
अद्य अ द्य अरुणान् उषः अथ नः विश्वा सौभ-

३ १ ३ १ २र ३ २
गानि सौ भगानि आ वह २ ॥ ८ ॥ अश्विना वर्त्तिः

३ २ १ २र ३ १ २र ३ २उ २ १ २
अस्मत् आ गोमत् दस्रा हिरण्यवत् अर्वाग्रथं समन-

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
सानियच्छतम् १ आ इह देवा मयोभुवा मयः भुवा

३ २ १ २र १ २र ३ १ २ ३ १ २ ३
दस्रा हिरण्यवर्त्तनी हिरण्य वर्त्तनीइति उषर्बुधः उषः

१ २र ३ १ २र १ २र ३ २ ३ २
बुधः वहन्तु सोमपीतये सोम पीतये २ यौ इत्था

१ २र ३ २ १ २र १ २र ३ १ २ ३
श्लोकम् आ दिवः ज्योतिः जनाय चक्रथुः आ नः

१ २र ३ २ ३ १ २र ३ १ २र
ऊर्जम् वहतम् अश्विना युवम् २ ॥ ९ ॥ अग्निस्तम्मन्येयोवसुः १

२ २ ३ १ २ ३ २ १ २र ३ १ २ ३ २
अग्निः हि वाजिनम् विशे ददाति विश्वचर्षणिः विश्व
२ २ ३ २ ३ १ २ ३ १ २ ३ २
चर्षणिः अग्निः राये स्वाभुवम् सु आभुवम् सः प्रीतः
३ १ २र १ २ ३ २ ३ १ २ ३ ३ २ १ २र
याति वार्यम् इष७स्तोतृभ्यआभर २ सः अग्निः यः वसुः
३ २ ३ १ २ ३ १ ३र २ १ २ २
गृणे सम् यम् आयन्ति आ यन्ति धेनवः सम्
१ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
अर्वन्तः रघुद्रुवः रघु द्रुवः सम् सुजातासः सु जातासः
३ १ २ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
सूरयः इष७स्तोतृभ्यआभर ३ ॥ १० ॥ महेनोअद्यबोधय १ या
३ २ ३ २ ३ २ ३ २ १ २र ३
सुनीथे सु नीथे अौचद्रथे अौचत् रथे व्यौच्छः वि
१ २र ३ २ ३ १ २र ३ १
औच्छः दुहितः दिवः सा वि उच्छ सहीयसि सत्य-
२ ३ २ १ २ ३ १ २ ३ २ ३ २
श्रवसिवाय्ये सुजातअश्वसूनृते २ सा नः अद्य आ द्य
३ १ २ ३ २ ३ २ ३ २
आभरद्वसुः आभरत् वसुः २ वि उच्छ दुहितः दिवः या
३ १ २र ३ १ २र १ २र ३ १ ३ २ १ २ ३
उ व्यौच्छः वि औच्छः सहीयसि सत्यःश्रवसिवाय्येसुजाते
१ २ १ २ ३ १ २ ३ १ २ ३ १ २ ३
अश्वसूनृते ३ ॥ ११ ॥ प्रतिप्रियतम७रथम् १ अत्यायातम् अति
१ २र ३ २ १ २र ३ २ १ २र १ २र
आयातम् अश्विना तिरः विश्वाः अहम् सना दस्रा
१ २र १ २र ३ १ २ १ २र ३
हिरण्यवर्त्तनी हिरण्य वर्त्तनीद्रुति सुषुम्णा सु सुम्ना
१ २र १ २र १ २र २ ३ १ २ ३ १ २ २ ३
सिन्धुवाहसा सिन्धु वाहसा माधीममश्युत७हवम् २ आ नः
१ २र १ २र १ २र १ २र ३ २ १ २र
रत्नानि बिभ्रती अश्विना गच्छतम् युवम् रुद्रा

१ २र १ २र ३ १ २ ३ २ ३
हिरण्यवर्त्तनी हिरण्य वर्त्तनीइति जुषाणा वाजिनीवसू

३ १ २ ३ १ २ ३ १ २ १ २
वाजिनी वसूइति माध्वीममश्रुतꣳहवम् ३ ॥ १२ ॥ अबो-

३ २ ३ २ ३ १ २ १ २र १ २र ३ १ २ ३ २
ध्यग्निःसमिधाजनानाम् १ अबोधि होता यजथाय देवान्

३ २ ३ २ ३ १ २ ३ १ २र ३ २ ३ १ २र
ऊर्ध्वः अग्निः सुमनाः सु मनाः प्रातः अद्यात् समि-

३ १ २र ३ १ २ ३ २ ३ २
द्धस्य सम् इद्धस्य रुशत् अदर्शि पाजः महान् देवः

१ २र ३ २ ३ १ २ ३ १ २ १ २र
तमसः निः अमोचि २ यत् ईम् गणस्य रशनाम् अजी

३ १ २ १ २र ३ १ २र १ २र ३ २
गरिति शुचिः आङ्क्ते शुचिभिः गोभिः अग्निः आत्

१ २र ३ १ २ ३ १ २ ३ २ ३
दक्षिणा युज्यते वाजयन्ति उत्तानाम् ऊर्ध्वः अधयत्

१ २ ३ २ १ २र १ २र १ २र
जुहूभिः ३ ॥ १३ ॥ इदम् श्रेष्ठम् ज्योतिषाम् ज्योतिः आ

३ २ ३ १ २ ३ २ ३ १ २र
अगात् चित्रः प्रकेतः प्र केतः अजनिष्ट विभ्वा

३ १ २र १ २र ३ १ २ ३ १ २ ३ २
वि भ्वा यथा प्रसूता प्र सूता सवितुः सवाय एव

१ २र ३ १ २ १ २र ३ १ २र १ २र ३
रात्री उषसे योनिम् आरैक् १ रुशद्वत्सा रुशत् वत्सा

१ २र ३ २ ३ १ २र ३ ३ १ २र
रुशती श्वेत्या आ अगात् आरैक् उ कृष्णा सदनानि

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३र १ २
अस्याः समानबन्धू समान बन्धूइति अमृते अ मृतेइति

३ १ २ १ २र १ २र ३ २ ३
अनूचीइति द्यावा वर्णम् चरतः आमिनाने आ

१ २ ३ २ ३ २ १ २र १ २र ३ २
मिनानेइति २ समानः सम् आनः अध्वा स्वस्रोः अनन्तः

अन् अन्तः तम् अन्यान्या अन्या अन्या चरतः देव-
शिष्टे देव शिष्टेइति न मेथेतेइति न तस्थतुः सुमेके
सु मेकेइति नक्ता उषासा समनसा स मनसा विरूपे
वि रूपेइति २ ॥ १४ ॥ आ भाति अग्निः उषसाम् अनीकम्
उत् विप्राणाम् वि प्राणाम् देवयाः देव याः वाचः अस्थुः
अर्वाञ्चा नूनम् रथ्या इह यातम् पीपिवांसम्
अश्विना घर्मम् अच्छ १ न संस्कृतम् सम् कृतम् प्रमि-
मीसः गमिष्ठा अन्ति नूनम् अश्विना उपस्तुता उप
स्तुता इह दिवा अभिपित्वे अभि पित्वे अवसा
आगमिष्ठा आ गमिष्ठा प्रति अवर्त्तिम् दाशुषे शम्भविष्ठा
शम् भविष्ठा २ उत आ यातम् सङ्गवे सम् गवे प्रातः अह्नः
अ ह्नः मध्यन्दिने उदिता उत् इता सूर्यस्य दिवा
नक्तम् अवसा शन्तमेन न इदानीम् पीतिः अश्विना
आ ततान २ ॥ १५ ॥ एताः उ त्याः उषसः केतुम्
अक्रत पूर्वे अर्द्धे रजसः भानुम् अञ्जते निष्कृ-
ण्वानाः निः कृण्वानाः आयुधानि इव धृष्णवः

१ २र १ २र १ २र ३ १२ ३
प्रति गावः अरुषीः यन्ति मातरः १ उत् अपप्तन्

२ ३ १ २ १ २र ३ १ २ ३ १ २ १ २र
अरुणाः भानवः वृथा स्वायुजः सु आयुजः अरुषीः

३ १ २र ३ १ २ ३ १ २ ३ १ २ १ २र
गाः अयुक्षत अक्रन् उषासः वयुनानि पूर्वथा रुशन्तम्

३ २ १ २र ३ १ २र १ २र ३ १ २
भानुम् अरुषीः अशिश्रयुः २ अर्चन्ति नारीः अपसः न

३ १ २ ३ १ २ ३ १ २ १ २र ३
विष्टिभिः समानेन सम् आनेन योजनेन आ परा-

२ १ २र १ २र ३ १ २ ३ १ २र ३ १ २ ३
वतः इषम् वहन्तीः सुकृते सु कृते सुदानवे सु

१ २र १ २र १ २र १ २र ३ २
दानवे विश्वा इत् अह यजमानाय सुन्वते ३ ॥ १६ ॥

१ २र ३ २ ३ १ २र ३ २
अबोधि अग्निः ज्मः उत् एति सूर्यः वि उषाः

३ २ ३ २ ३ १ २ १ २र ३ १ २
चन्द्रा मही आवः अर्चिषा आयुक्षाताम् अश्विना

१ २र १ २र ३ २ ३ २ १ २र
यातवे रथम् प्र असावीत् देवः सविता जगत्

१ २र ३ २ ३र १ २ १ २र ३ १ २र ३ १ २
पृथक् १ यत् युञ्जाथेइति वृषणम् अश्विना रथम् घृतेन

३ १ २र ३ २ ३ १ २ १ २र १ २र
नः मधुना क्षत्रम् उक्षतम् अस्माकम् ब्रह्म पृतनासु

३ २ १ २र १ २र १ २र ३
जिन्वतम् वयम् धना शूरसाता शूर साता भजेमहि २

२ ३ २ १ २ ३ १ २ ३ १ २र
अर्वाङ् त्रिचक्रः त्रि चक्रः मधुवाहनः मधु वाहनः

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २र
रथः जीराश्वः जिर अश्वः अश्विनोः यातु सुष्टुतः

३ २ ३ २ ३ १ २ ३ १ २
सु स्तुतः त्रिवन्धुरः त्रि वन्धुरः मघवा विश्वसौभगः

विश्व सौभगः: ग्राम् नः आ वक्षत् द्विपदे द्वि
पदे चतुष्पदे चतुः पदे ३ ॥ १७ ॥ प्र ते धाराः असु-
श्चतः अ सश्चतः दिवः न यन्ति वृष्टयः अच्छ वाजम्
सहस्रिणम् १ अभि प्रियाणि काव्या विश्वा चक्षाणः
अर्षति हरिः तुञ्जानः आयुधा २ सः मर्मृजानः आयुभिः
इभः राजा इव सुव्रतः सु व्रतः श्येनः न वंसु
सीदति ३ सः नः विश्वा दिवः वसु उत उ पृथिव्याः
अधि पुनानः इन्दो आ भर ४ ॥ १८ ॥

॥ इत्युत्तरार्चिके अष्टमप्रपाठकः ॥

ॐ ॥ प्र अस्य धाराः अक्षरन् वृष्णः सुतस्य ओजसः
देवान् अनु प्रभूषतः प्र भूषतः १ सप्तिम् मृजन्ति
वेधसः गृणन्तः कारवः गिरा ज्योतिः जज्ञानम्
उक्थ्यम् २ सुषहा सु सहा सोम तानि ते पुनानाय
प्रभूवसो प्रभु वसो वर्धासमुद्रमुक्थ्य ३ ॥ १ ॥ एषब्रह्मा-
यऋत्वियः १ त्वाम् इत् शवसः पते यन्ति गिरः न
संयतः सम् यतः २ विस्रुतयोयथापथः ३ ॥ २ ॥ आत्वारथं-

२ ३ १ २ १ २र १ २र ३ १ २र ३ १ २र ३
यथोतये १ तुविशुष्म तुवि शुष्म तुविक्रतो तुवि क्रतो
१ २र १ २र ३ २ ३ २ १ २र
शचीवः विश्वया मते आ पप्राथ महित्वना २ यस्य
३ २ ३ २ १ २र ३ १ २ ३ १ २ १ २र
ते महिना महः परि ज्मायतम् ऊयतुः हस्ता
१ २र ३ १ २ १ २र १ २र
वज्रम् हिरण्ययम् ॥ ३ ॥ आ यः पुरम् नार्मिणीम्
१ २र १ २र ३ २ ३ ७ २ १ २र १ २र
अदीदेत् अत्यः कविः नभन्यः न अर्वा सूरः न
३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २र
रुरुक्वान् शतात्मा शत आत्मा १ अभि द्विजन्मा द्वि जन्मा
३ १ २ १ २र १ २र ३ २ ३ १ २र
त्रि रोचनानि विश्वा रजांऽसि शुशुचानः अस्थात् होता
१ २र ३ २ ३ १ २ ३ २ ३ २ १ २र ३ १ २
यजिष्ठः अपाम् सधस्थे सध स्थे २ अयम् सः होता यः द्विजन्मा
३ १ २र १ २र ३ २ १ २र ३ २ १ २र ३
द्वि जन्मा विश्वा दधे वार्याणि श्रवस्या मर्त्तः यः अस्मै
१ २ ३ १ २र ३ १ २ २ ३ २ ३ २ १ २र ३
सुतुकः सु तुकः ददाश ३ ॥ ४ ॥ अग्नेतमद्य १ अश्व हि अग्ने
१ २र ३ १ २ १ २र ३ २ ३ २ ३ १ २ ३ २
क्रतोः भद्रस्य दक्षस्य साधोः रथीः ऋतस्य बृहतः
३ १ २ ३ २ ३ १ १ २र ३ १ १२
बभूथ २ एभिः नः अर्कैः भव नः अर्वाङ् स्वः न
१ २र १ २र १ २र ३ १ २ ३ १ २र १ २र
ज्योतिः अग्ने विश्वेभिः सुमनाः सु मनाः अनीकैः ३
२ ३ १ २ ३ १ २ १ २र ३ २ १ २र ३
॥ ५ ॥ अग्नेविवस्वदुषसः १ जुष्टः हि दूतः असि हव्य-
१ २ ३ १ २र १ २र ३ २ ३ १ २ ३ २
वाहनः हव्य वाहनः अग्ने रथीः अध्वराणाम् सजूः
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
स जूः अश्विभ्याम् उषसा सुवीर्यम् सु वीर्यम्

३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
घ्नोऽइति धेहि श्रवः बृहत् २ ॥ ६ ॥ विधुन्दद्राणꣳसमने-

३ २ १ २र ३ २ ३ २ ३ २ ३ २
बहूनाम् १ युवानꣳ सन्तं पलितो जगार । देवस्य पश्य काव्यं महित्वाऽद्या ममार स ह्यः समान

३ २ १ २र ३ २ १ २र ३ २
आ यः मह: शूरः सनात् अनीडः अ नीडः यत्

३ १ २ ३ २ १ २र १ २र ३ २ ३ २ १ २र
चिकेत सत्यम् इत् न मोघम् वसुस्पार्हम् उत जेता

३ २ १ २ ३ १ २र ५ २र १ २र
उत दाता २ आ एभिः ददे वृष्ण्या पौꣳस्यानि येभिः

१ २र३ ३ १ २ ३ १ २र ३ २ १ २र
औक्षत् वृत्रहत्याय वृत्र हत्याय वज्री ये कर्मणः

३ १ २ ३ २ ३ २ ३ २ ३ १ २
क्रियमाणस्य मह्ना ऋतेकर्मन् ऋते कर्मम् उदजायन्त

३ १ २र ३ २ २ ३ १ २ ३ २ ३ २
उत् अजायन्त देवाः ३ ॥ ७ ॥ अस्तिसोमोअयꣳसुतः १

१ २र ३ २ ३ २ ३ २ १ २र ३ १ २ १ २र
पिबन्ति मित्रः मि त्रः अर्यमा तना पूतस्य वरुणः

३ १ २ ३ १ २ १ २र ३ २ ३ २ ३
त्रिषधस्थस्य त्रि सधस्थस्य जावतः २ उत उ नु अस्य

१ २र १ २र ३ १ २ १ २र ३ २ १ २र
जोषम् आ इन्द्रः सुतस्य गोमतः प्रातः होता

३ २ ३ १ २ २ ३ १ २र
इव मत्सति २ ॥ ८ ॥ बण्महाꣳअसिसूर्य १ बट् सूर्य अवसा

३ २ ३ २ ३ २ ३ ३ २ ३ १ २
महान् असि सता देव महान् असि मह्ना देवानाम्

३ ७ २ ३ ७ २ ३ १ २ ३ २ ३ २ ३ २
असुर्यः अ सुर्यः पुरोहितः पुरः हितः विभु वि भु

१ २र १ २र ३ १ २ २ १ २ ३ २
ज्योतिः अदाभ्यम् अ दाभ्यम् २ ॥ ९ ॥ उपनोहरिभिःसुतम् १

३ २ ३ १ २ ३ १ २र ३ २ १ २र ३ १
हिता यः वृत्रहन्तमः वृत्र हन्तमः विदे इन्द्रः शत-

२ ३ २ ३ १ २ ३ १ २ ३ २ २ ३
क्रतुः प्रत क्रतुः उपनोहरिभिःसुतम् २ त्वम् हि वृत्रहन्

२ १ २र १ २र १ २ ३
वृत्र हन् एषाम् पाता सोमानाम् असि उपानो-

१ २ ३ २ १ २ ३ १ २ ३ १ २ ३ १ २
हरिभि सुतम् ३ ॥ १० ॥ प्रवोमहेमहेवृधेभरध्वम् १ उरुव्यचसे

३ १ २र ३ १ २ ३ २ ३ २ १ २र १ २र
उरु व्यचसे महिने सुवृक्तिम् सु वृक्तिम् इन्द्राय ब्रह्म

३ १ २र ३ १ २र ३ १ २ ३
जनयन्त विप्राः वि प्राः तस्य व्रतानि न मिनन्ति

१ २र १ २र १ २र १ २र १ २र ३ २ ३ २ ३ २
धीराः २ इन्द्रम् वाणीः अनुत्तमन्युम् अनुत्त मन्युम् एव सत्रा

१ २र ३ १ २र १ २र १ २र ३ २
राजानम् दधिरे सहध्यै हर्यश्वाय हरि अश्वाय बर्हय सम्

३ २ १ २ ३ १ २ ३ २ १ २र ३ २
आपीन् ३ ॥ ११ ॥ यदिन्द्रयावतस्त्वम् १ शिक्षेयम् इत् महयते

३ १ २ ३ २ ३ २ ३ १ २ ३
दिवेदिवे दिवे दिवे रायः आ कुहचिद्विदे कुहचित्

१ २र ३ ३ २ ३
विदे न हि त्वत् अन्यत् अन् यत् मघवन् नः

१ २र १ २र १ २र ३ २ ३ २ ३ २
आप्यम् वस्यः अस्ति पिता च न २ ॥ १२ ॥ श्रुधि

१ २र ३ १ २ ३ १ २ १ २र ३
हवम् विपिपानस्य वि पिपानस्य अद्रेः अ द्रेः

१ २र १ २र ३ १ २र ३ २ ३ २ १ २र
बोध विप्रस्य वि प्रस्य अर्चतः मनीषाम् कृष्व दुवांसि

१ २र १ २र ३ २ ३ १ २र १ २र ३ १ २
अन्तमा सचा इमा १ न ते गिरः अपि मृष्ये तुरस्य

३ २ ३ २ १ ७ २ ३ ७ २ ३ २
न सुष्टुतिम् सु स्तुतिम् असुर्यस्य अ सुर्यस्य विद्वान्

१ २र ३ १ २ ३ १ २र
सदा ते नाम स्वयशः स्व यशः विवक्मि २ भूरि हि

२ १२र १२र १२र ३ २ ३ २
ते सवना मानुषेषु भूरि मनीषी हवते त्वाम् इत्

३ २ ३ २ ३ २ ३ १ २
मा आरे अस्मत् मघवन् ज्योक् करिति २ ॥ १३ ॥ प्र

३ २ ३ १ ३ २ १२र ३२ ३ ३ २
उ सु अस्मै पुरोरथम् पुरः रथम् इन्द्राय शूषम् अर्चत अभीके

३ २ ३ २ ३२ ३ २ ३१२
चित् उ लोककृत् लोक कृत् सङ्गे सम् गे समत्सु

२ १२र ३ २ ३ १ ३१२ ३ २
स मत्सु वृत्रहा वृत्र हा अस्माकम् बोधि चोदिता

१२र ३ १२ ३२ १२ ३ २ १२र
नभन्ताम् अन्यकेषाम् अन् यकेषाम् ज्याकाः अधि

१२र १२र १२र ३ १२ १२र
धन्वसु १ त्वम् सिन्धून् अव असृजः अधराचः अहन्

१२र ३ २ ३ २ ३ १२र ३
अहिम् अशत्रुः अ शत्रुः इन्द्र जज्ञिषे विश्वम् पुष्यसि

१२र ३ १२र ३ १२ ३१२
वार्यम् तम् त्वा परि स्वजामहे नभन्तामन्यकेषाम्

३ २उ ३१२ २ १२र १२र २ ३
ज्याकाअधिधन्वसु २ वि सु विश्वाः अरातयः अ रातयः

२ ३ १२र १२र ३ १२र ३२
अर्यः नशन्त नः धियः अस्ता असि शत्रवे वधम्

३ १२र ३ २ ३२
यः नः इन्द्र जिघांसति या ते रातिः ददिः

१२र १२ ३१२ ३ २उ ३१२ ३२
वसु नभन्तामन्यकेषाम् ज्याकाअधिधन्वसु ३ ॥ १४ ॥ रेवान्

३१२ ३ २ १२र ३१२ २
इत् रेवतः स्तोता स्यात् त्वावतः मघोनः प्र

३ १२ ३ २ ३ २ ३ १ २ ३
इत् उ हरिवः सुतस्य १ उक्थश्वनशंस्यमानम् २ मा नः

१२ १२र १२र ३ १२र २
इन्द्र पीयत्नवे मा शर्धते परा दाः शिक्ष शचीवः

१ २र १ २ ३ १ २ १ २र ३ २
ग्रषीभिः २ ॥ १५ ॥ एन्द्रयाहिहरिभिः १ अत्र वि नेमिः एषाम्

२ ३ १ २र ३ २र ३ २ ३ १ २ १ २ ३ १
उराम् न धूनुते वृकः दिवोअमुष्यशासतः दिवंयय-

२ २ ३ १ २र १ २र ३ २ ३ २ १ २र
दिवावसो २ आ त्वा ग्रावा वदन् इह सोमी घोषेण

३ १ २ ३ २ ३ १ २ १ २ ३ १ २ १ २र
वक्षतु दिवोअमुषगशासतोदिवंययदिवावसो २ ॥ १६ ॥ पवस्व

३ १ २ १ २र १ २र ३ १ २ ३ १ २
सोम मन्दयन् इन्द्राय मधुमत्तमः १ ते सुतासः विपश्चितः

३ १ २ ३ २ ३ २ ३ १ २र
विपः चितः शुक्राः वायुम् असृचत २ असृग्रम्

३ १ २ ३ २ ३ २ २ ३ २ ३ १ २ ३ १
देववीतये देव वीतये वाजयन्तोरथाइव २ ॥ १७ ॥ अग्निᳪ

२र ३ १ २ १ २र ३ १ २र ३
होतारम्मन्येदास्वन्तम् १ यजिष्ठम् त्वा यजमानाः हुवेम

१ २र १ २र ३ १ २र १ २र
ज्येष्ठम अङ्गिरसाम् विप्र वि प्र मन्मभिः विप्रेभिः

३ १ २र १ २र १ २र ३
वि प्रेभिः शुक्र मन्मभिः परिज्मानम् परि ज्मानम्

२ १ २र ३ २ ३ १ २ ३ २
इव द्याम् होतारम् चर्षणीनाम् शोचिष्केशम् शोचिः

३ १ २र ३ २ १ २र ३ १ २
केशम् वृषणम् यम् इमाः विशः प्र अवन्तु जूतये

१ २र ३ २ ३ १ २र ३ १ २ ३
विशः २ सः हि पुरु चित् ओजसा विरुक्मता वि

१ २ १ २र १ २र ३ २ ३ २
रुक्मता दीद्यानः भवति द्रुहन्तरः द्रुहम् तरः

३ २ ३ २ ३ २ ३ २ ३ १ २र
परशुः न द्रुहन्तरः द्रुहम् तरः वीडु चित् यस्य

१ २र ३ १ २र १ २र ३ २ ३ २
समृतौ सम् ऋतौ श्रुवत् वना इव यत् स्थिरम्

३ १ २ ३ १ २र ३ २ ३ १ २
निषसहमानः निः सहमानः यमते न यमते धन्वासहा
२ १ २र ३
धन्व सहा न अयते २ ॥ १८ ॥

॥ इत्युत्तरापदे नवमप्रपाठकस्य प्रथमार्द्धः ॥

१ २र १ २र १ २र १ २र १ २र ३
॥ ॐ ॥ अग्ने तव श्रवः वयः महि भ्राजन्ते
१ २ ३ १ २र १ २र ३
अर्चयः विभावसो विभा वसो बृहद्भानो बृहत् भानो
१ २र १ २र ३ २ ३ २र ३ १ २ ३ १
शवसा वाजम् उक्थ्यम् दधासि दाशुषे कवे १ पावक-
२ ३ २ ३ १ २ ३ २ ३ १ २र
वर्चाः पावक वर्चाः शुक्रवर्चाः शुक्र वर्चाः अनूनवर्चाः
१ २र ३ २ ३ ३ १ २ ३ २ ३ २
अनून वर्चाः उत् इयर्षि भानुना पुत्रः पुत्र त्रः
३ १ २ ३ १ २ ३ १ २र १ २र ३ १ २
मातरा विचरन् वि चरन् उप अवसि पृणक्षि
१ २र ३ १ २ ३ १ २ १ २र ३
रोदसीइति उभेइति २ ऊर्जः नपात् जातवेदः जात
१ २ ३ १ २ १ २ ३ १ २
वेदः सुशस्तिभिः सु शस्तिभिः मन्दस्व धीतिभिः
३ २ १ २ १ २र ३ १ २र १ २र
हितः त्वेइति इषः सम् दधुः भूरिवर्पसः भूरि
३ १ २ ३ १ २ ३ १ २ ३ २
वर्पसः चित्रोतयः चित्र ऊतयः वामजाताः वाम
३ २ ३ १ २ ३ १ २
जाताः ३ इरज्यन् अग्ने प्रथयस्व जन्तुभिः अस्मेइति
१ २र ३ ३ ३ १ २ १ २र
रायः अमर्त्य अ मर्त्य सः दर्शतस्य वपुषः वि
३ १ २ ३ २ १ २र ३ १ २ ३ १ २
राजसि पृणक्षि दर्शतम् क्रतुम् ४ इष्कर्तारम् अध्वरस्य

१ २र  ३  १ २र  १ २र  १ २  ३ २
प्रचेतसम् प्र चेतसम् चयन्तम् राधसः महः रातिम्

३ १ २, ३ १ २  ३  १ २र  ३ १  १ २र  १ २र
वामस्य सुभगाम् सु भगाम् महीम् इषम् दधासि

३  २  ३ २  ३ १ २  ३  २  ३ १ २
सानसिम् रयिम् ऋतवानम् महिषम् विश्वदर्शतम्

३ २  ३  २  ३ १ २  ३  २  १ २र
विश्व दर्शतम् ५ अग्निम् सुम्नाय दधिरे पुरः जनाः

१ २र  २  ३  १ २  १  १ २र  ३
श्रुत्कर्णम् श्रुत कर्णम् सप्रथस्तमम् स प्रथस्तमम् त्वा

२  १ २र  १ २र  ३ २  १  २र ३ २ ३ १ २
गिरा दैव्यम् मानुषा युगा ६ ॥१॥ प्रसोअग्नेतवोतिभिः १

१ २र  ३ २  १ २र  ३ २  ३ १ २  १ २र  ३
तव द्रप्सः नीलवान् वाशः ऋत्वियः इन्धानः विष्णो

२  ३  २  ३ १ २  ३ १ २  ३  २  ३ २
आ ददे त्वम् महीनाम् उषसाम् असि प्रियः क्षपः

१ २र  ३  २  १ २र  १ २र  ३
वस्तुषु राजसि २ ॥ २ ॥ तम् ओषधीः अप धीः दधिरे

१ २र  ३ १ २  १ २र  ३ २  ३  १ २
गर्भम् ऋत्वियम् तम् आपः अग्निम् जनयन्त मातरः

३  २  ३  २  ३ १ २  ३  १ २
तम् इत् समानम् सम् आमम् वनिनः च वीरुधः

३ १ २  ३  १ २र  ३  ३ १ २  ३ २  ३
अन्तर्वतीः च सुवते च विश्वहा विश्व हा २ ॥ ३ ॥

३ २  १ २र  ३  ३  ३ २  ३
अग्निः इन्द्राय पवते दिवि शुक्रा वि राजति

१ २र  ३  २  २  २  ३ १ २
महिषी इव वि जायते १ ॥ ४ ॥ यः जागार तम्

१ २र  ३  २  ३ १ २  ३  १ २र
ऋचः कामयन्ते यः जागार तम् उ सामानि

३  २  ३ १ २  २  ३ २  १ २र  ३  १ २र
यन्ति यः जागार तम् अयम् सोमः आह तव

१ २ २ १ २ १ २ १२ २
अहम् अस्मि सख्ये स ख्ये न्योकाः नि ओकाः १

२ २ २ १ १२र २ २ २
॥ ५ ॥ अग्निः जागार तम् ऋचः कामयन्ते अग्निः

२ २ २ १ २र १ २ २
जागार तम् उ सामानि यन्ति अग्निः जागार

२ २ २ १ २र २ २ २ १ २ ३ १ २
तम् अयम् सोमः आह तवाहमस्मिसख्येन्योकाः १ ॥ ६ ॥

१ २र ३ १ २ ३ १ २र ३ १ २ ३ १ २र
नमः सखिभ्यः स खिभ्यः पूर्वसद्भ्यः पूर्व सद्भ्यः

१ २र ३ १ २ ३ १ २ १ २ १ २र
नमः साकन्निषेभ्यः साकम् निषेभ्यः युञ्जे वाचम्

३ १ २ ३ २ ३ १ २र ३ १ २ १ २र
शतपदीम् शत पदीम् १ युञ्जेवाचꣳशतपदीम् गाये

३ १ २ ३ १ २ ३ २ १ २र
सहस्रवर्त्तनि सहस्र वर्त्तनि गायत्रम् त्रैष्टुभम् त्रै

२ १ २र ३ १ २र ३ १ २ १ २र ३ १ २ १ २र
ष्टुभम् जगत् २ गायत्रन्त्रैष्टुभञ्जगत् विश्वा रूपाणि सम्भृता

३ २ १ २र ३ २ ३ २
सम् भृता देवाः ओकाꣳसि चक्रिरे २ ॥ ७ ॥ अग्निः

१ २र १ २र ३ २ १ २र १ २र १ २र १ २र
ज्योतिः ज्योतिः अग्निः इन्द्रः ज्योतिः ज्योतिः इन्द्रः

१ २र १ २र १ २र १ २र १ २र ३ २ ३
सूर्यः ज्योतिः ज्योतिः सूर्यः १ पुनः ऊर्जा नि वर्त्तस्व

१ २र ३ २ १ २र १ २र ३ १ २र १ २र ३ २
पुनः अग्ने इषा आयुषा पुनः नः पाहि अꣳहसः सह रय्या नि

३ १ २र १ २र १ २र ३ १ २ ३ २ ३ १ २
वर्त्तस्व अग्ने पिन्वस्व धारया विश्वप्स्न्या विश्व प्स्न्या विश्वतः

१ २ १ २ ३ २उ २ २ १ २र ३ १ २र
परि २ ॥ ८ ॥ यदिन्द्राहंयथात्वम् १ शिक्षेयम् अस्मै दित्सेयम्

१ २र १ २र ३ १ २ २ ३ २ १ २र
शचीपते शचौ मनीषिणे यत् अहम् गोपतिः

३ १२ ३ १२ ३ १२र
गो पतिः स्याम् २ धेनुः ते इन्द्र सूनृता सु नृता
१२र ३ २ २ १२र ३१२ ३
यजमानाय सुन्वते गाम् अश्वम् पिप्युषी दुहे २॥ ९॥
१२र ३ १२ ३ १२र ९
आपः हि स्थ मयोभुवः मयः भुवः ताः नः
२९ ३ २ १२र १२र २
ऊर्जे दधातन दधात न महे रणाय चक्षसे १ यः
३ १२ १२र १२र ३ २ ३ १
वः शिवतमः रसः तस्य भाजयत इह नः उशतीः
३ १२ १२र १२र ३ १२र १२र
इव मातरः २ तस्मै अरम् गमाम वः यस्य क्षयाय
१२र १२र ३१२ २ २३१२
जिन्वथ आपः जनयथ च नः २॥ १०॥ वातआवा-
३२ ३२ ३ १ ३ २ १२र
तु भेषजम् १ उत वात पिता असि नः उत भ्राता
३२ ३ १२र ३ २ २ १२ ३
उत नः सखा स खा सः नः जीवातवे कृधि २
२ ३२ ३ २ ३१२ ३ १२र १२र
यत् अदः वात ते गृहे अमृतम् अ मृतम् निहितम्
३ १२र १२र ३ १२ ३२
नि हितम् गुहा तस्य नः धेहि जीवसे २ ॥११॥ अभि
३२ ३१२ ३२ ३ १२ ३ १२
वाजी विश्वरूपः विश्व रूपः जनित्रम् हिरण्ययम्
१२र १२र २ २ ३ २९ १२र ३२
बिभ्रत् अत्कम् सुपर्णः सु पर्णः सूर्यस्य भानुम्
३ २ १२र १२र १२र ३२ ३१ ३
ऋतुथा वसानः परि स्वयम् मेधम् ऋज्रः जजान १
२ १२र ३ १२ ३२ २ १२र ३ २
अप्सु रेतः शिश्रिये विश्वरूपम् विश्व रूपम् तेजः पृथिव्याम्
१२र ३ १२ ३ १२ ३ १२ ३ १२
अधि यत् सम्बभूव सम् बभूव अन्तरिक्षे स्वम् महिमानम्

१ २र　१ २र　१ २र　१ २र　१ २र　३ २
मिमानः कनिक्रन्ति वृषाः अश्वस्य रेतः २ अयम्
३ १ २　१ २र　३ १　१ २र　१ २र　३ २　३ २
सहस्रा परि युक्ता वसानः सूर्यस्य भानुम् यज्ञः
३　१ २ ३ १ २ ३ १ २　३ २　३ २　१ २र
दाधार सहस्रदाशतदाभूरिदावा धर्त्ता दिवः भुवनस्य
३ १ २　१ २ ३ २उ २ १ २र　३ २　३ २
विश्पतिः २ ॥ १२ ॥ नाकेसुपर्णमुपयत्पतन्तम् १ ऊर्ध्वः गन्धर्वः
१ २र　१ २र　३　३ २　३　२　३ २
अधि नाके अस्थात् प्रत्यङ् प्रति अङ् चित्रा
१ २र　३　१ २र　१ २र　१ २र　३ २
बिभ्रत् अस्य आयुधानि वसानः अत्कम् सुरभिम्
३　२　३ २　१२　१ २र　३　३
सु दृशिम् दृशे कम् स्वः न नाम जनत प्रि-
१ २　१ २　३ २　३　२　१ २　१ २र
याणि २ द्रप्सः समुद्रम् सम् उद्रम् अभि यत् जिगाति
१ २र　१ २र　१ २र　१ २र　३　२　३ १ २
पश्यन् गृध्रस्य चक्षसा विधर्मन् वि धर्मन् भानुः शुक्रेण
३ १ २　३　२　३ १ २　३ १　१ २र　३ १ २
शोचिषा चकानः तृतीये चक्रे रजसि प्रियाणि ३ ॥ १३ ॥

॥ इत्युत्तरापर्दे प्रपाठकस्य द्वितीयार्द्धः ॥

३ २　१ २र　३ २　३ २　३　२
। ॐ । आशुः शिशानः वृषभः न भीमः घनाघनः
१ २र　३　२　३ १ २　३　१ २र　३　२
क्षोभणः चर्षणीनाम् संक्रन्दनः सम् क्रन्दनः अनिमिषः
३　२　३　२　३　२　३ २　१ २र
अ निमिषः एकवीरः एक वीरः शतम् सेनाः
३　२　१ २र　३ १ २　३　१ २र
अजयत् साकम् इन्द्रः १ संक्रन्दनेन सम् क्रन्दनेन
३　१ २　३　१ २　३ १ २　३　१ २　३　१ २
अनिमिषेण अ निमिषेण जिष्णुना युत्कारेण युत् कारेण

दुश्च्यवनेन दुः च्यवनेन धृष्णुना तत् इन्द्रेण जयत
तत् सहध्वम् युधः नरः इषुहस्तेन इषु हस्तेन वृष्णा
सः इषुहस्तैः इषु हस्तैः सः निषङ्गिभिः नि सङ्गिभिः
वशी संस्रष्टा सम् स्रष्टा सः युधः इन्द्रः गणेन
संसृष्टजित् संसृष्ट जित् सोमपाः सोम पाः
बाहुशर्द्धी बाहु शर्द्धी उग्रधन्वा उग्र धन्वा प्रतिहिताभिः
प्रति हिताभिः अस्ता२ ॥ १ ॥ बृहः पते परि दीय
रथेन रक्षोहा रक्षः हा अमित्रान् अ मित्रान्
अपबाधमानः अप बाधमानः प्रभञ्जन् प्र भञ्जन् सेनाः
प्रमृणः प्र मृणः युधा जयन् अस्माकम् एधि अविता
रथानाम १ बलविज्ञायः बल विज्ञायः स्थविरः स्थ
विरः प्रवीरः प्र वीरः सहस्वान् वाजी सहमानः
उग्रः अभिवीरः अभि वीरः अभिसत्वा अभि सत्वा
सहोजाः सहः जाः जैत्रम् इन्द्र रथम् आ तिष्ठ
गोवित् गो वित् २ गोत्रभिदम् गोत्र भिदम् गोविदम्
गो विदम् वज्रबाहुम् वज्र बाहुम् जयन्तम् अज्म

२ १ ३ १२ १२र ३२ ३
प्रमृणन्तम् प्र मृणन्तम् ओजसा इमम् सजाताः स

१२र ३ १२र १२र ३
जाताः अनु वीरयध्वम् इन्द्रम् सखायः स खायः

१२र ३ ३२ ३१२ १२र
अनु सम् रभध्वम् ३ ॥ २ ॥ अभि गोत्राणि सहसा

१२र ३ २ ३ २ ३२ ३१२ ३२
गाहमानः अदयः अ दयः वीरः शतमन्युः शत

३ १२र ३ २ ३ २ १ २ ३०२
मन्युः इन्द्रः दुश्च्यवनः दुः च्यवनः पृतनाषाट अयुध्यः

३ ०२ ३१२ १२र ३ २ ३२ १२र
अ युध्यः अस्माकम् सेनाः अवतु प्र युत्सु १ इन्द्रः

३ १२र १२र १२र १२र ३२ ३२ ३
आसाम् नेता बृहः पतिः दक्षिणा यज्ञः पुरः एतु

१२र ३ १२ ३ १२ ३ २
सोमः देवसेनानाम् देव सेनानाम् अभिभञ्जतीनाम्

३ २ १२६ १३२ ३ १२र
अभि भञ्जतीनाम् जयन्तीनाम् मरुतः यन्तु अग्रम् २

१२र १२र १२र १२र ३ १२ ३
इन्द्रस्य वृष्णः वरुणस्य राज्ञः आदित्यानाम् आ

१२ ३१२ १२र ३२ ३१२ ३२
दित्यानाम् मरुताम् शर्द्धः उग्रम् महामनसाम् महा

३ ३ १२ ३ १२ १२र ३११
मनसाम् भुवनच्यवानाम् भुवन च्यवानाम् घोषः देवानाम्

१२र २ ३ २ ३
जयताम् उत् अस्थात् ३ ॥ ३ ॥ उत् हर्षय मघवन्

१२र २ १२र ३ १ २ १२र
आयुधानि उत् सत्वानाम् मामकानाम् मनाꣳसि

२ ३ १२ १२र
उत् वृत्रहन् वृत्र हन् वाजिनाम् वाजिनानि उत्

१२र १२र ३ १२र ३१२ १२र १२र
रथानाम जयताम् यन्तु घोषाः १ अस्माकम् इन्द्रः सम्

२ ३ १२ ३१२ १२र
तेषु सम् कृतेषु ध्वजेषु अस्माकम् याः इषवः
३ १२ ३२ १२र ३ २
ताः जयन्तु अस्माकम् वीराः उत्तरे भवन्तु अस्मान्
३ १२र ३२ १२र ३१२
उ देवाः अवत हवेषु २ असौ या सेना मरुतः
१२र ३१२ ३ १२र ३ १२र १२र
परेषाम् अभ्येति अभि एति नः ओजसा स्पर्धमाना
३ १२र १२र १२र३ १२र ३१२
ताम् गूहत तमसा अपव्रतेन अप व्रतेन यथा एतेषाम्
३२ ३ २ ३ ३ २ ३१२
अन्यः अन् यः अन्यम् अन् यम् न जानान् ३ ॥४॥ अमीषाम्
३२ ३ १२ ३ १२ ३ २ १२र
चित्तम् प्रतिलोभयन्ती प्रति लोभयन्ती गृहाण अङ्गानि
३ १२र ३ २ ३ २ ३ २
अप्वे परा इहि अभि प्र इहि निः दह हृत्सु
१२र ३१२ ३१२ ३ १२र १२र ३
शोकैः अन्धेन अमित्राः अ मित्राः तमसा सचन्ताम् १
२ ३ १२र ३ १२र १२र ३ २
प्र इत जयत नरः इन्द्रः वः शर्म यच्छतु उग्राः
३ १२ ३ २ ३ २ १२र
वः सन्तु बाहवः अनाधृष्याः अन् आधृष्याः यथा
१२र १२र ३ १२र ३ १२र १२र
असथ २ अव सृष्टा परा पत शरव्ये ब्रह्मसंशिते
१२र ३ १२र ३१२ ३ १२र २ ३
ब्रह्म संशिते गच्छ अमित्रान् अ मित्रान् प्र पद्यस्व
२ ३१२ ३ २ ३ ३२
मा अमीषाम् कम् च न उत् शिषः २ ॥५॥ कङ्काः
३ २ ३ २ १२र ३ १२र १२र १२र
सुपर्णाः सु पर्णाः अनु यन्तु एनान् गृध्राणाम् अन्नम्
२ ३ १२र ३ २ ३
असौ एतु सेना सा एषाम् मोचि अघहारः अघ-

दारः च न इन्द्र यथाऽसि एनान् अनुसंयन्तु अनु
संयन्तु सर्वान् १ अमित्रसेनाम् अमित्र सेनाम् मघवन्
अस्मान् शत्रूयतीम् अभि उभौ ताम् इन्द्र वृत्रहन्
वृत्र हन् अग्निः च दहतम् प्रति १ यत्र बाणाः
सम्पतन्ति सम् पतन्ति कुमाराः विशिखाः वि शिखाः
इव तत्र नः ब्रह्मणः पतिः अदितिः अ दितिः शर्म
यच्छतु विश्वाहा शर्म यच्छतु २ ॥ ६ ॥ वि रक्षः वि मृधः
जहि वि वृत्रस्य हनूइति रुज वि मन्युम् इन्द्र
वृत्रहन् वृत्र हन् अमित्रस्य अ मित्रस्य अभिदासतः अभि
दासतः १ वि नः इन्द्र मृधः जहि नीचा यच्छ पृतन्यतः
योऽस्माँऽअभिदासति अधरम् गमय तमः २ इन्द्रस्य
बाहूइति स्थविरौ स्थ वीरौ युवानौ अनाधृष्यौ अन्
आधृष्यौ सुप्रतीकौ सु प्रतीकौ असह्यौ अ सह्यौ तौ
युञ्जीत प्रथमौ योगे आगते आ गते याभ्याम् जितम्
असुराणाम् अ सुराणाम् सहः महत् ३ ॥ ७ ॥ मर्माणि
ते वर्मणा छादयामि सोमः त्वा राजा अमृतेन अ
मृतेन अनु वस्ताम् उरोः वरीयः वरुणः ते कृणोतु
जयन्तम् त्वा अनु देवाः मदन्तु १ अन्धाः अमित्राः अ

मित्राः भवत अशीर्षाणः अ शीर्षाणः अहयः इव तेषाम्
वः अग्निमूढानाम् अग्नि मूढानाम् इन्द्रः हन्तु वरंवरम्
वरम् वरम् २ यः नः स्वः अरणः यः च निष्ट्यः
जिघांꣳसति देवाः तम् सर्वे धूर्वन्तु ब्रह्म वर्म मम
अन्तरम् शर्म वर्म मम अन्तरम् ३ ॥ ८ ॥ मृगः न
भीमः कुचरः गिरिष्ठाः गिरि स्थाः परावतः आ
अगन्थ परस्याः सृकम् सꣳशाय सम् शाय पविम् इन्द्र
तिग्मम् वि शत्रून् ताढि वि मृधः नुदस्व १ भद्रम् कर्णेभिः
शृणुयाम देवाः भद्रम् पश्येम अक्षभिः अ क्षभिः यजत्राः
स्थिरैः अङ्गैः तुष्टुवाꣳसः तु स्तुवाꣳसः तनूभिः वि
अशेमहि देवहितम् देव हितम् यत् आयुः २ स्वस्ति सु
अस्ति नः इन्द्रः वृद्धश्रवाः वृद्ध श्रवाः स्वस्ति सु अस्ति
नः पूषा विश्ववेदाः विश्व वेदाः स्वस्ति सु अस्ति नः
तार्क्ष्यः अरिष्टनेमिः अरिष्ट नेमिः स्वस्ति सु अस्ति नः
बृहः पतिः दधातु ओम् स्वस्तिनोबृहस्पतिर्दधातु ३ ॥ ९ ॥

॥ इत्युत्तरार्च्चिके नवमप्रपाठकः समाप्तः ॥

॥ समाप्ता च सामपदसंहिता ॥








